# ॥ यज्ञसम्राट्शतकम् ॥

********************

गङ्गातीरो मद्गृहं, नान्यदस्ति
गङ्गाशब्दो जीवनं नान्यदस्ति
गङ्गामाता मे, न चान्या जगत्यां
गङ्गापुत्रश्श्रीगुरुर्मे वरेण्य:॥ १ ॥

यज्ञे विप्राः क्व क्व सन्तीति पश्यन्
आहुत्या ये देवतास्तोषयन्ति
वेदै ऋग्भिर्याजुषैस्स्वारबद्धैर्
जोजुह्वन्तः प्रीणयन्त: पितॄँश्च॥ २॥

श्राद्धे पक्षे पक्षिभिर्वायसैर्यद्
भोज्यं कव्यं क्षीरमन्नादिजातं
तच्छास्त्रीयैस्सद्विधानैस्सुविप्रा:
निर्देशैश्श्रीप्राबलै: पालयन्ति॥ ३॥

गोग्रासायाद्यं सुपक्वस्य दत्वा
श्वभ्यश्चान्त्यं दीयतामन्नखण्डं

विप्रान्क्षिप्रं दक्षिणाशामुखांश्च
तूष्णीम्भूतान्भोजयेच्छ्राद्धहूतान्॥४॥

लोहे नैवं, पित्तले वाथ कांस्ये
शक्तिश्चेद्वा राजते हेमपात्रे
श्राद्धं भोज्यं प्राबलैर्भूसुरेभ्य:
वित्ताशक्तौ मृत्तिकापात्रमध्ये[1]॥५॥

स्मृत्यादीनां धर्मशास्त्रस्य दिष्ट्या
साध्यं सर्वं पैतृकं श्राद्धकार्यं
इत्यादेशैर्योजयेच्छ्रौतमार्गै:
सन्मार्गं श्रीप्राबलं तं नमाम:॥६॥

कर्पूराद्यैश्चैव नीराजनं स्यात्
नीलाब्जैश्श्रीनीलकण्ठार्चनं च
मन्त्रैस्सोऽर्च्यष्षोडशैश्चोपचारै
रित्यादेशं प्राबलं तं नमाम:॥७॥

काश्यां योऽसौ विश्वनाथो वरेण्य:

[1] इति प्राबलैर्निर्देशैविप्रेभ्यश्श्राद्धभोज्यपात्रं जना: जानन्तीत्याशय:।

सोऽसौ पूज्यो द्वादशस्थानलिङ्गे
गङ्गातीरे यन्नरौराख्यदेशश्
श्रद्धाबद्धैरुच्यते वृद्धिकेशी[2]॥८॥

यद् वै श्रौतीं सत्प्रभां सन्तनोति
यद् यज्ञानां कीर्तिमत् स्थापकञ्च
यद् विज्ञानाम्पोषकं पालकञ्च
तन्निर्दिष्टं प्राबलं पालयाम:॥९॥

सङ्कल्पानां मूर्तरूपस्स्वभूप
आत्मज्ञानामग्रगामी जनानां
सन्देष्टा यश्शैवलोकस्य सोऽसौ
तं भक्त्या श्रीसद्गुरुं भावयाम:॥१०॥

हास्ये यस्य श्रीर्वसेदानने च
वाक्कण्ठस्था श्रीहरिर्जीवने च
शक्तिश्चित्ते कर्मयोगे च कृष्णश्
शम्भ्वात्मानं सद्गुरुं भावयाम: ॥११॥

---

[2] श्रद्धाबद्धैस्तत्र नरौराख्यदेशे एष एव शिवो वृद्धिकेशी प्रोच्यत इत्याशय:

यस्य श्रुत्वा चेतनापूर्णवाचं
यस्याश्रित्य प्रेमपन्थानमाशु
यस्यामत्य त्रीञ्जयेदात्मशत्रून्
तं दिव्यार्थं प्राबलं भावयाम: ॥१२॥

उत्कण्ठाभिर्यज्ञमायातलोको
यस्योद्बोधैर्बुध्यते स्मात्मरूपं
सञ्जायेत प्राणशक्तिर्मृतेऽपि
तं वाग्घर्षं प्राबलं प्रार्चयाम:॥१३॥

जीवे कार्या रे दया सर्वदैव
चित्ते धार्या मित्रता सज्जनेन
देवार्चायां वित्तशाठ्यं न कुर्याद्
इत्यादेशं प्राबलं पालयाम: ॥१४॥

माता भूमिश्चाहमस्यास्सुतोऽस्मि
अस्या जातस्स्नेहमस्यां दधामि
अन्नं पानं चापि भूम्या: लभेऽहं
तं भूपुत्रं भूसुरं भावयाम: ॥१५॥

वेदाज्ञा वै सर्वदा पालनीया
सत्कर्तव्यान्नात्मरोधं प्रकुर्याद्
राष्ट्रे यज्ञे प्राणदानं ह्यभीतो
यो वक्ति स्म स्मारणं तस्य कुर्म: ॥१६॥

यमलरमलविद्यावेतृसम्मानभाजं
नवलकमलपूजासक्तसाम्राज्यराजं
हरिकथनसमर्चोद्दीप्तभालं विशालं
प्रबलगुरुवरं तं नौमि शैवाभलाभम् ॥१७॥

अविरलसुरनद्या: वारिगाढं विबाधं
सकलजनतया यश्चोच्यते शैव! बाढं
शतशतमखपुण्यैस्स्वर्गलोके धनाढ्यं
प्रबलगुरुवरं तं नौमि भक्त्या शुभाढ्यम्॥१८॥

विविधजपतपोभि: कालमायापयन्तं
तमसि गतजनांश्चोद्भासनं प्रापयन्तं
त्यजत जगति मोहं चेति सूद्घोषयन्तं
प्रबलगुरुवरं तं नौमि यज्ञेष्टिमन्तम्॥१९॥

नरवरशुभभूमौ प्रेम सन्दर्शयन्तं
मनुजजनिमहत्वं शास्त्रमार्गैर्वदन्तं
द्विजगतशुभचर्यां यत्नत: पालयन्तं
प्रबलगुरुवरं तं नौमि चित्तं हरन्तम्॥२०॥

यतिनतकरपात्राल्लब्धदीक्षं सुशिक्षं
अधिगतपरमार्थं शम्भुभक्त्यैकभिक्षं
मखहुतिजसुगन्धैर्हृष्टिमद्दिव्यलक्ष्यं
प्रबलगुरुवरं तं नौमि विज्ञैस्समीड्यम्॥२१॥

अतिथि-यति-गुरूणां सेवनं विप्रपूजां
श्रुतिवचनसुनिष्ठां शास्त्रवाक्येषु भक्तिं
हरिहरजगदम्बापूजनानीति कुर्याद्
वदति गुरुवरो यश्श्रद्धया तं समीडे॥२२॥

अधिकृतमखकार्ये यस्स एवास्तु योज्य:
प्रतिदिनमपि सन्ध्याशीलविप्रो नियोज्य:
अपसरत दुराशा: केवला: वित्तलुब्धा:
वदति गुरुवरो यश्श्रद्धया तं समीडे॥२३॥

सरलसुजनविप्राश्शास्त्रनिष्ठा भवेयुर्
विगतकलुषचित्ताश्चैव शिष्टा भवेयुः
स्मृतिपदसमवेता वेदहृष्टाश्श्रयेयुर्
वदति गुरुवरो यश्श्रद्धया तं समीडे॥२४॥

सुदृढवपुषमेनं वीक्ष्य को न प्रहृष्टो
बटुरिव सरलास्यं हास्यवार्ताप्रियं च[3]
तृणमणिसमदृष्टिं भेदहीनाक्षिमन्तं
प्रबलगुरुवरं तं श्रद्धया भावयामि॥२५॥

बहुविधवचसां यत्सारभूतं सुतथ्यं
शिवमिति च सदा तद्गीयते शास्त्रशीलैस्
तदपि निजमनस्युद्भावयज्जीवतीव
प्रबलगुरुवरं तं श्रद्धयाहं प्रणौमि॥२६॥

श्रीविद्योल्लसितं श्रियामिव सदा धारावदुत्साहिनं
सद्विद्याप्रतिपादकैरहरहस्संसेव्यमानं द्विजं
सिद्ध्या सिद्धिपथप्रदर्शितमखं सख्युस्सुखं दौःख्यहं

---

[3] कदाचिद्गुरुर्हास्यप्रियोऽपि जायते , येन पार्श्वस्था अपि प्रसन्नतामनुभवेयुरिति भावार्थः।

वन्दे श्रीप्रबलाभिधं गुरुवरं सत्यप्रियं मौढ्यहम्॥२७॥

विद्वद्गोष्ठसमीक्षणेन सततं यो मोदते विज्ञमुद्
यज्ञश्रीपरिराजितत्ववपुषा सन्दृश्यते दर्शकैः
गोशालाशिवमन्दिरश्रुतिगृहाद्युद्धाटकत्राटकं
वन्दे श्रीप्रबलाभिधं गुरुवरं संसारतस्तारकम्॥२८॥

शोकक्रोधमदस्मरज्वरवतां हर्येकनामौषधिर्
द्वेषेर्ष्यापरलाभदोषविकृतौ हर्येकचिन्तौषधिः
हिंसामत्सरनिन्दनादिविषयान् हर्तुं हरिं सुस्मरेत्
यो वक्ति स्म सदा विदां प्रबलराड् विष्णवेकसंसाधनः॥२९॥

द्वैताद्वैतपथैश्च माध्वशरणैश्शैवैश्च शाक्तैस्तथा
साङ्ख्यश्रीपरिराजितैरपि बुधैर्वैशेषिकैश्चान्वहं
योगाचाररतैस्समर्चितवपुर्योऽन्यैश्च मीमांसकैर्
वन्दे श्रीप्रबलाभिधं गुरुवरं नम्यं च नैयायिकैः॥३०॥

यं वीक्ष्यात्मसुखं हि शब्दशरणाः नागेशभट्टश्रियो
मन्येरन् क्रतुमन्त्र ऊहनपरा पातञ्जला वाग्जलाः
काव्यं यत्र सुरश्रियामिव विदो गायन्ति तत्तुष्टये

वन्दे श्रीप्रबलाभिधं गुरुवरं विद्वन्नृणामाश्रयम् ॥३१॥

वीक्ष्यास्यं स्मितसंयुतं द्विजवरा यस्य प्रयान्तो मुदं
श्रुत्वा मेघमिव स्वरं क्रतुगतं सद्ब्रह्मचर्योद्भवं
हृष्ट्वा तद्विमलार्थसंयुतवचश्श्रीभिर्नमन्ति प्रियं
वन्दे श्रीप्रबलाभिधं गुरुवरं गोविप्रसंरक्षकम्॥३२॥

अस्मद्यज्ञगतस्य दुःखमथ नोज्जायेत कस्याप्यरे
विप्रेभ्यो नर! कम्बलानि कुरुताच्छीतापनोदाय च
मिष्टान्नं फलमस्तु भोजनमहो दाक्षिण्यरूपं धनं
भूदेवाः! भवतामसौ प्रबलराट्, तृप्यन्तु यज्ञे मम॥३३॥

स्वाहाकारगतं स्वरं श्रुतिगतं शृण्वन् मुदं गच्छति
साधूच्चारणतत्पराय सततं सद्दक्षिणां यच्छति
आचार्यादिवरत्वमस्तु विबुधाः! यद्वा घटस्थापनं
सर्वं तत् प्रबलाधिराजगुरुभिस्साध्येत निर्देशनैः॥३४॥

दृष्ट्वा श्रीधरणीधरं श्रुतिधरं हर्षैकवाचां वरं
यद्वा श्रीलदिवाकरं क्रतुमतां नम्यं शिवाढ्यं जनं

पार्श्वस्थं च गुणप्रकाशमपि यो वाऽन्यां समर्थश्रियं[4]
गर्वं मोदयुतं व्रजेत्प्रबलराट् वावन्द्यते सोऽधुना॥३५॥

चर्चां यस्य निशम्य विप्रबटुका: कूर्दन्ति क्रत्वाशया
"क्व क्व क्वोद्भविताधुना मख" इति प्रेहन्त एवं मिथ:
दुर्गा-रुद्र-गणेश-याजुषगतान्मन्त्रान् रटन्तोऽन्वहं
यास्याम: प्रबलश्रियो वयमपीत्युत्सौक्यचित्तान्विता:॥३६॥

किं कर्मास्तु कियत्यथास्तु मखजा हस्तस्थिता दक्षिणा
किं पृच्छन्ति क्रतुप्रवेशसमये तत्र स्थिता प्रेक्षका
इत्याद्युत्सुकतावितर्कसलिलै रोमाञ्चिताशाञ्चिता:
यान्ति श्रीप्रबलक्रतुं द्विजजना नीत्वा स्ववस्त्रादिकम्॥३७॥

नागोजीकृतशास्त्रपङ्क्तिमपि ते चित्ते विचार्य क्वचित्
रक्षोहागमलघ्वनेकपदयुग्घेतून्स्मरन्तो मखे
तिष्ठन्ति क्रतुजुड्भिरीक्षितजना विद्यैकमार्गप्रिया
एवं श्रीप्रबलाभिधैर्गुरुवरैरायोज्यते वित्सभा॥३८॥

---

[4] समर्थस्य श्रियं – अत्र षष्ठीतत्पुरुषत्वेन समर्थश्रीरिति स्त्रीत्वं वहति, अन्यां समर्थश्रियमिति। समर्थस्वामिनः तपश्शास्त्रादिरूपिणीं श्रियं दृष्ट्वेत्याशयः।

पुष्पाणीवातिशयसुरभिश्रीश्रितं जीवनं च
धर्मोद्गारैरखिलजनतोल्लासदं धीवनं च
यस्याकाङ्क्षा परमपदवीप्रापणायैव, नेह
सन्तं श्रीमत्प्रबलमिति तं सद्गुरुं भावयाम:॥३९॥

यस्यादर्शैर्बहुजनपदे जीविताऽऽस्साधुसन्तो
यस्योत्कर्षैर्हवनकरणे मोदिता विप्रवृन्दा:
यस्याशीश्च प्रणतजनतां शिष्यकानुद्धरेच्च
सन्तं श्रीमत्प्रबलमिति तं सद्गुरुं भावयाम: ॥४०॥

ब्रह्मैकत्वे निजवपुरहो भावयन्भासमानश्
शारीरं लौकिकमिदमहो मन्यते नैव किञ्चित्
दुर्गापाठे शिवजपविधौ सर्वदा सावधानो
वन्दे श्रीमत्प्रबलगुरुभिर्दर्शितं दिव्यमार्गम्॥४१॥

शोकान्मुक्तिं निरयपतनाद्यश्च सद्यो रुणद्धि
लक्ष्मीर्यं चाऽधिगतपरमार्थं न नो संरुणद्धि
एकं ब्रह्मापरमिह न वै किञ्चिदस्तीति बुद्ध्या
जीवेद्यस्तं प्रबलगुरुभिर्जीवितं जीवयाम:॥४२॥

गायत्री वै परमसुखदाऽलोकलोकार्थदात्री
गायत्री त्रायत इति सदा चित्तलोकेषु धत्त
गायत्र्या नो विरहितजनो यज्ञकार्येषु मान्यो
गायत्रीमन्त्रमननपरं सद्गुरुं भावयाम:॥४३॥

भाग्यान्नैवाधिकमिह परं लभ्यते वै मनुष्यैर्
हस्तस्थोप्युद्गलति यदि ते भाग्यहानि: कदाचित्
तद्भाग्यं वै सुकृतचरितैरर्ज्यते कर्मभिश्च
पुण्योत्कर्षैर्लभत इव तद्वाञ्छितं - श्रीगुरूक्ति:॥४४॥

नानाकष्टैर्बहुविधपथैर्नैकदेहेषु बद्धो
योन्याः योनिं श्रयति, तरतान्नैव चास्मान्महाब्धे:
सत्यं त्वेकं हरिरिति पदं यश्शरण्यं समेषां
श्रित्वा सद्यस्तरति जनिमान्, तं भजेद्-उक्तिमान्स:॥४५॥

विष्णुश्श्रीमान् श्रयति तुलसीं, नो तुलस्या: प्रियाऽन्या
विष्णोरर्चास्वपि च तुलसीमर्पयेद्भक्तिभावै:
विष्णुस्तृप्येदधिकतुलसीसौरभैर्मोक्षदोऽसौ
तस्मात्तां रोपय जय जन! श्रीधरेष्टां स्वगेहे॥४६॥

वेदार्थानां वदति महिमा यस्य यज्ञेषु साक्षाद्
हव्याशीर्नृत्यति मखमुखे मत्तवद् यत्र मन्त्रैः
विप्रा मेघस्वरगलरवाः याजुषान् योजयन्ति
सन्तं तं श्रीप्रबलगुरुमुद्भावयामस्स्मरामः॥४७॥

धर्मश्चैकः क्रतुरिति कलौ स्वर्गलोकस्य दृश्यं
वर्मैतद्वै ह्यतिशयशुभं काम्यदं सुप्रियं मे
यज्ञेनोद्भाव्यत इव सदा श्रौतगुण्यप्रचारः
इत्थं लोके मखसुकृतसञ्चारिणं भावयामः॥४८॥

क्वचिद्वा कलिङ्गे क्वचिच्चैव बङ्गे
क्वचिच्चैव दिल्ल्यां क्वचिच्चाप्यथाङ्गे
कृताः कारिताः सन्मखाः येन शक्त्या
नुमः प्राबलं सम्बलं हार्दभावैः॥४९॥

हरिद्वार-काशी-नरौरापुरेषु
पुरी-कर्णपूः-गोरखेषूत्तरेषु
कुरुक्षेत्र-मुम्बा-गया-माथुरेषु
मखाः कारिताः येन दिल्ल्यां नुमस्तम्॥५०॥

क्वचिल्लक्षचण्डी क्वचित्कोटिचण्डी
क्वचिद्रुद्रयाग: क्वचिद्विष्णुहोम:
क्वचित् कानकीधारया हेमवृष्टि:
कृता येन तं श्रीगुरुं भावयाम:॥५१॥

क्वचिन्नार्मदे वा तटे सम्भ्रमन्तं
क्वचिद्यामुने स्वाश्रमे संवसन्तं
क्वचिद्गाङ्गतीरे च मोदायमानं
नुम: प्राबलं सद्गुरोर्जीवनं तत्॥५२॥

क्वचित्तीर्थयात्रा क्वचिद्यज्ञपात्रा:[5]
क्वचिद्धोममन्त्रा: क्वचिच्चैव तन्त्रं
क्वचिच्छास्त्रचर्चा मुरारेस्समर्चा
समं जीवनं धर्मसक्तं नमाम:[6] ॥५३॥

क्वचिज्जागरश्शैवकार्येषु रात्रौ

---

[5] यज्ञाय पात्रब्राह्मणा इत्याशय:।

[6] कभी तीर्थ की यात्राएं, कभी यज्ञ के लिए पात्र ब्राह्मणों का चयन, कहीं पर हवन के लिए मंत्र, कहीं (अनिष्ट नाश के लिए) तंत्र, कहीं शास्त्रों की चर्चा, कहीं मुरारी (विष्णु) की अर्चना! ओहो! सारा जीवन ही महाराजजी का पूरी तरह से धर्म में डूबा हुआ है। हम उन्हें प्रणाम करते हैं।

**क्वचिन्नागरैस्साकमागामिकार्ये**
**क्वचिन्मोदमग्नस्य विप्रैश्च संस्था**
**शुभं प्राबलं जीवनं सुस्मराम:॥५४॥**

**क्वचिन्मृत्तिकास्वेव तिष्ठेत्स्स मोदी**
**क्वचित्कम्बलेनैव शीतापनोदी**
**क्वचिद्विप्रवृन्दस्य बुद्धिप्रचोदी**
**प्रमोदं सतां सद्गुरुं पूजयाम:॥५५॥**

**अरे गाणपत्यं वहेच्छैवरूपं**
**पुनश्शाक्ततां द्वैतमद्वैतमार्गं**
**समे चान्तकाले विशन्तीव तस्मिन्**
**न यस्मात्पुनर्लोकतामेति जानन्[7]॥५६॥**

**दिनेशो निशेशो जलेशो धनेशो**
**नगेशो खगेशो सुरेशो गणेशः**
**फणीशो महेशस्समे सत्यरूपास्**
**समर्च्या इमे प्रत्ययै: क्षेमकामै:॥५७॥**

---

[7] चाहे गणपति के मार्ग का अनुसरण करके गणेश की दीक्षा धारण करो चाहे शैवरूप धारण करो, चाहे शाक्त बनो, या द्वैत अद्वैत किसी भी मार्ग के पथिक बनो, ये सब उसी एक परब्रह्म में प्रवेश करते हैं, (जानन् - जिसको जानता हुआ मनुष्य) जहां या जिसमें पहुंच कर , (सारूप्यादि प्राप्त कर) इस संसार में लौटना नहीं होता - ऐसी बातें श्री प्रबल जी महाराज आपने शिष्यों को बताते रहते हैं।

अहो कल्पनाढ्यस्समश्चैष लोको
तरुः कामनानां फलेदत्र पुंसां
क्वचिद्रागरूपो विरागाढ्य एवं
- निजैर्दर्शनैर्जीवति प्राबलार्थ:[8]॥५८॥

अहो वासुकिर्नागराट् तस्य लोके
विभूतिश्च भोगेषु मग्ना: फणीन्द्रा:
तदैश्वर्यकाङ्क्षा मनुष्याश्श्रयन्ति
सुमन्त्रैश्च सिद्ध्या व्रजेत्सर्पलोकम्॥५९॥

कलौ विक्रमो भूपवर्य:,कवीनां
गुरु: कालिदास:, पुरीणां च काशी
यथा हस्तपात्रो हि वै धर्मसम्राट्
तथा यज्ञसम्राट्! नमामो वयं त्वाम्॥६०॥

पुण्यव्रतं व्रतरतं व्रतमात्रजीव्यं

[8] प्राबल: अर्थ:/तात्पर्यं/चिन्तनं वा- प्राबलार्थ:। [प्रबलस्य अयं प्राबल:, प्राबलश्चासावर्थ इति] इत्येतैरुपर्युक्तैर्निजैर्दर्शनैरधुनापि तच्छिष्यमनस्सु जीवतीत्यर्थ:।

गुण्यप्रियं क्रतुरतं क्रतुकृत्प्रियं च
आशाविमोहजविबन्धननाशदक्षं
शैवव्रतं प्रबलनामगुरुं स्मराम:॥६१॥

वेदान्तगामिपुरुषैरपि वन्द्यरूपं
संसारसक्तपुरुषैरपि पूज्यभूपं
भूपैश्च भूसुरगणैरपि हृष्यमाणं
विद्वद्वृतं प्रबलनामगुरुं नमाम:॥६२॥

रामोऽस्ति दिव्यसुखदस्सकलार्तिहन्ता
रामो हि कामफलदो विमलैकगन्ता
तं वै भजन्तु मनुजा अपि सन्तु सन्तो
वक्तीति य: प्रबलनामगुरुस्स वन्द्य:॥६३॥

रामायणं पठत रे परिहाय सर्वं
गीतानुगा भवत रे गुरुवाक्यशीला:
पौराणिकं चरत रे सुरपूज्यधर्मं
यो दिश्यति प्रबलराड्गुरुरर्चनीय:॥६४॥

रामाय चार्पयत रे निजजीवनानि

रामाय सन्त्यजत रे पशुभूधनानि
रामाय संव्रजत रे विधिवद्वनानि
य: प्रेरयेत्प्रबलराड्गुरुरस्ति वन्द्य:॥६५॥

वेदोक्तमार्गमभिसंश्रयत द्रुतं रे
शास्त्रोक्तमाधुररसभ्रमरा भवेत
गोविप्रसत्सु कुरुत प्रियतां सदैव
य: प्रेरयेत्प्रबलनामगुरुस्स पूज्य:॥६६॥

धामानि यान्ति न धनानि सह त्वया रे
नामानि सन्ति च मृषा पितृभि: कृतानि
तस्माज्जुषस्व सुकृते च विहाय भोगान्
वक्ति स्म यो गुरुवर: प्रबलस्स पूज्य:॥६७॥

विद्या प्रसादसुखदा मुखभूषणास्ति
विद्या विवादकरणाय न युज्यते रे
विद्या नृपैरपि सदा परिपूज्यते वै
यश्चाह शिष्यबटुकान् प्रबलस्स वन्द्य:॥६८॥

सद्ब्रह्मचर्यशरणान्न भवन्ति रोगा:

रे ब्रह्मचर्यधरणं हि महच्च पुण्यं
तद्वै समस्ततपसां वपुषश्च मूलं
यो धारयेत्प्रबलराड्गुरुरस्ति वन्द्यः॥६९॥

शैवी कृपा हि फलदा भवतीह जीव्ये
साकं न यान्ति गृहिणो न धनं न जाया
तस्माच्छिवं जपत रे त्यजताशु मोहं
यश्चाह नित्यमनुपालयति स्म, वन्द्यः॥७०॥

भूदेवताः! मखहुताशसुतृप्तिदास्स्युः
स्वर्देवता भुवि सुखं च ददत्वभीष्टं
देवस्य नुश्च भवतान्मिथ एष धर्मो
धर्मार्थदं सुरसरीप्रियमर्चयामः॥७१॥

अश्वत्थ-निम्ब-तुलसी-कदली-वटाम्र
शेफालिका-र्क-करवीर-पलाश-दर्भ-
धत्तूर-बिल्व-बकुला-र्जुन-पारिजात-
श्रीशाल्मली-खदिर-दाडिम-युक्तगेहः[9] ॥७२॥

---

[9] यतीनामाश्रमो मठो वैव तेषां गृहम्भवतीति कृत्वा गेहशब्दोऽत्राश्रमपरः।

ऐरण्ड-वेतस-करञ्ज-मधूक-साल-
खर्जूर-चम्पक-कदम्बक-भद्रदारू-
श्रीपाटला-ऽऽमलक-चम्पक-यूथिका-ख्य-
जम्बीर-ताल-मठ-राजित! ते नमोस्तु![10]॥७३॥

माण्डूक्यशाङ्करसुभाष्यविभातचित्तं
श्रीगौडपादकृतपद्यसुगन्धितं तम्
इत्थं सदौपनिषदादिविचारशीलं
ब्रह्मात्मना परिचरन्तमहं नमामि॥७४॥

ग्रन्थप्रकाशनरतं कविताप्रमोदं
ग्रन्थप्रपाठनपरं द्विजनन्दनाँश्च
स्कान्दीकथासु रममाणमनेकरूपं
काशीनिवासशरणं प्रबलं नमामि॥७५॥

वीरव्रती जलमुचामिव वाक्प्रयोक्ता
धीराकृतिश्श्रुतिमताञ्च सभासु वक्ता
देवालये शिवगुरोरभिषेककर्ता
शोभाननं गुरुवरं प्रबलं स्मरामि॥७६॥

---

[10] एतैर्वृक्षैश्शोभिते मठे राजित गुरो ते नम इत्याशय:।

गुणप्रकाशतां प्रयातु, नैव यातु डम्बरं
समर्थतां श्रियम्प्रयातु, नैव शक्तिहीनतां
दिवाकरो भवेत्तपोभिरस्तु लोकमङ्गलं
दिशेत्सदैव यो नमामि सद्गुरुं मखप्रियम्॥७७॥

सदैव दीनहीनपोषकं विहीनदोषकं
अधर्मकृत्सु रोषकं सुधर्ममार्गजोषकं
हरीशगाथनैर्जनप्रतोषकं नृभूषकं
नमामि यज्ञराजमर्थवत्सु मानितं गुरुम्॥७८॥

सुवर्णराजतैर्विनिर्मितं गणेशमर्चयेत्
प्रभाजुषेऽपि[11] ताम्रपात्रतोऽर्घ्यदानतत्परः
जगत्सुरक्षिकापदेऽरुणं सरोजमर्पयेत्
स गाङ्गवारिरुद्रसेचनो बली गुरुर्जयेत्॥७९॥

सतां विदां मुदा प्रमोदधारिणं सुकृत्यदं
दिवि प्रियानिव स्वदेवतार्चकान् ह्वयेच्च यः
विधिप्रियो विधिप्रियान् विधानतस्समर्चयन्

[11] प्रभाभिर्जुषतीति प्रभाजुट्, तस्मै। सूर्यायेत्याशयः।

सुरप्रियस्स सद्गुरुर्जयेत्स्वगौरवैस्सदा॥८०॥

न योषिदङ्गसङ्गमैः कदापि तृप्यतात्पुमान्
न हेमपर्वतं समाप्य तुष्टिमेति मानवः
जगद्विदह्य चापि नैव क्रोधकृत् प्रशाम्यति
अतस् त्रिदोषतां विहाय नारकं[12] प्रणश्यतु॥८१॥

यमे ह्युपस्थिते न बन्धुबान्धवा न सोदरा
न पुत्रमित्रशिष्यकाः कलत्रगोत्रिणोऽथवा
भवन्ति रक्षणार्थिनस्तपांसि दानदक्षिणाः
शिवे सदा ह्यतो धियं नियोजयेद्-वदेद्गुरुः ॥८२॥

सदैव निर्मलाम्बुवत्स्वचित्तमाशु शोधयेत्
रहस्यहो निजं स्वयं निजेन चैव बोधयेत्
परो न कोऽपि मित्रशत्रुतां प्रयाति ते, स्वकं
समुद्धरेदथात्मनैव, यो वदेद्गुरुर्वरः[13]॥८३॥

---

[12] नारकं दु:खं, त्रिदोषैर्लब्धनरकदु:खं नश्यत्वित्याशय:

[13] अपने चित्त को हमेशा निर्मल जल की तरह साफ रखो, शुद्ध रखो! एकांत में जाकर खुद को जगाओ, अपने ही द्वारा अपना आत्मबोध जगाओ! कोई दूसरा मित्र या शत्रु हमारा नहीं है , हमें अपना अपनी ही आत्मा के द्वारा उद्धार करना है- ऐसा श्री प्रबल जी महाराज कहते हैं। (उद्धरेदात्मनात्मानम्)

**दशावतारसत्कथाप्रमोदितो जनेषु यो**
**विगायति स्म दुग्धसागरे शयानमच्युतं**
**हरिर्हरिर्हरिर्हरिस्समस्तभीतिनाशकं**
**ततोऽन्यथा न किञ्चिदस्ति सत्यमेतु निश्चयम्॥८४॥**

**हनूमतश्चरित्रभावमज्जनोऽथ सज्जनो**
**धनुष्मतश्च[14] चित्रमश्रुधारयाभिसिञ्चति**
**त्रिनेत्र-दत्तनेत्र-दत्तनेत्र-दत्तनेत्रक:[15]**
**महान् स यज्ञराड्विभातु नस्सदा मनस्तले॥८५॥**

**निपीतकाव्यमाधुरीजगन्मधुप्रपायकं[16]**
**समेतमाशुतोषचित्ततोषणाय साम्बुजं**
**विदृष्टपुण्यपापभेदवेदमार्गदर्शकं[17]**

---

[14] धनुष्मत: रामस्य चित्रं (हृदयस्थं, बहिर्वा) अश्रुधारया (भक्तिप्रेमोद्वेगत्वान्निस्सृताश्रूणां धारा तया) अभिषिञ्चति।

[15] त्रिनेत्र- शिव। त्रिनेत्रदत्तनेत्र - त्रिनेत्राय शिवाय दत्तं नेत्रं येन ,स विष्णु:। त्रिनेत्र-दत्तनेत्र (विष्णु:)-दत्तनेत्र-(विष्णुभक्ता:) - त्रिनेत्रदत्तनेत्रदत्तनेत्र- दत्तनेत्रक (विष्णुभक्तेषु वैष्णवेषु दत्ते नेत्रे येन (विष्णुभक्तान् प्रति विशेषसौहार्दसक्त:, तेषु आदरयुत:, तेषु विशेषेण दत्तं अवधानं, तेषु सम्माननेत्र:, तेषु कृतावधान:, वैष्णवसेवालग्नो वा) स श्रीप्रबलमहाज:, )

[16] निपीताश्चेमा: काव्यमाधुर्यो - निपीतकाव्यमाधुर्यस्ताभि: - निपीतकाव्यमाधुरीभि: (गीतगोविन्दगोपीगीतप्रभृतिभि:)। मधुन: प्रपायक: मधुप्रपायक:। जगतो मधुप्रपायक: - जगन्मधुप्रपायक:। निपीतकाव्यमाधुरीभि: जगन्मधुप्रपायक: य: - निपीतकाव्यमाधुरीजगन्मधुप्रपायक:। तम्।

[17] विदृष्टपुण्यपापभेद-वेदमार्गदर्शकं - अत्रोभयो: कर्मधारय:।

यतीश! यज्ञराट्! स्वराट्!  शिवार्थिजीवनं नुम:![18] ॥८६॥

परमहंसमिव क्वचिदद्भुतं
विमलहंसमिवात्मनि संरतं
धवलवस्त्रधरै: प्रणतं गुरुं
प्रबलनामशुभं प्रणमाम्यहम्॥८७॥

यतिसमाश्रितधर्ममुदं प्रियं
गृहिजनैरभिनन्दितसत्पदं
बटुगणैरपि संलसिताश्रमं
प्रबलधाम नमामि हरिश्रियम्॥८८॥

कुटिलताधमता ह्यपि दु:खदा
सरलता शुचिता द्विज! सौख्यदा
इति सुवाक्यचयं हृदये धरन्[19]
प्रबलपूज्यपदं प्रणमाम्यहम्॥८९॥

---

[18] पी हुई काव्य की मधुरताओं से जो इस पूरे संसार को मधु पिलाने वाले हैं। (साम्बुजम्)जो कमल के फूल लेकर भगवान् आशुतोष को प्रसन्न करने या उनका चित्त संतुष्ट करने के लिए (समेतम्) आए हुए हैं। पुण्य और पाप के भेद को जिन्होंने देख लिया है। ऐसे वेदमार्ग के दर्शक (दिखाने वाले) हे स्वामियों में श्रेष्ठ, यज्ञसम्राट्! हे अपनी आत्मा के राजा! आप का सम्पूर्ण जीवन शिवार्थी है। हम आपके इस जीवन को नमस्कार करते हैं।

[19] हे गुरो, कुटिलताधमता दुःखदेत्यादिकं भवतां वाक्यमहं स्वहृदये धरन् भवन्तं प्रबलाख्यं पूज्यपदं प्रणमामीत्याशयः।

अतिभयप्रदमस्ति जगत्त्विदं
पशुखगाप्चरकीटशरीरदं
शिवतयात्मनि सञ्चरतीव यो
भवभयाम्बुधिमुत्तरतात् से वै॥९०॥

क्रतुमयं सकलं मम जीवनं
हविषि याजुषमन्त्रसुभावनं
प्रतिपदं सुरभूसुरतर्पणं
इति विभावयति स्म गुरुस्स मे॥९१॥

न पतताद्विषये विषसम्मते
न हरतात्परवित्तमथ क्वचिद्
न कुरुतात्परयोषित्सङ्गमं
वदति यस्स्म नुमः प्रबलं गुरुम्॥९२॥

सकलमन्त्रमयी शिवदा शिवा
निखिलतन्त्रकरी भयहा ऽभया
शुभदयन्त्रतनुर्जगदम्बिका
श्रयति यस्स्म नुमः प्रबलाह्वयम्॥९३॥

सदसि वाक्श्रयते स हि पण्डित:
समरवीरवरो भव चण्डित:
धनजलैर्निधिभिस्सुखमण्डित:
वदति यस्स्म गुरुर्नयवित् स वै[20]॥९४॥

अतिशयं न वदेन्न च मौनवत्
अतिथिपूजनतां नहि सन्त्यजेत्
अतिमिरे वसतान् , न तमोमये
वदति यस्स्म, गुरु: प्रबलो वर: ॥९५॥

श्रमतया तपसा मनसा श्रयेत्
सकललक्ष्यमहो निजचिन्तितं
वद न क: प्रतियाति समुन्नतिं
नवलहर्षयुतो निजकर्मणि॥९६॥

यश्च नक्रासनाप्रेमपुण्यैर्दिनं
यापयेत्तत्तटे स्नानजप्यादिभिर्

[20] जो सभा में वाणी का आश्रय लेता है अर्थात् खूब शास्त्रार्थ करता है वही पंडित है! जो युद्ध में वीरश्रेष्ठ है, वह खूब क्रोधित होता है (या हे युद्ध में गए हुए वीर पुरुष तुम खूब क्रोधित होकर शत्रुओं का संघार करो)। इस सांसारिक, तथा धर्म आदि कर्मों को ठीक से करने के इच्छुक! तुम अपने परिश्रम से धन रूपी जल और निधियों से सुख का शृङ्गार करो! इस तरह सभी प्रकार की नीति को जानने वाले हमारे श्री प्रबल गुरुजी कहा करते थे।

भोगमोक्षप्रदा सर्वपापापहा
मानसे मे विराजेत गङ्गा सदा[21]॥९७॥

शूलहस्तार्चकं चक्रहस्तार्चकं
पाशहस्तं स्वमन्त्रैर्ह्वयेद्यश्च तं
दण्डहस्तस्य हस्तं  स्वहस्ताक्षरैर्[22]
वारयेद्वाङ्गवारा मुनिं तं नुम: ॥९८॥

दन्तिराजस्य नाम्नां सहस्रेण यो
मोदकान्यर्पयन् मन्त्रितानि प्रधी:
गाणपत्यं गणेशस्य भक्त्या भृतं
यज्ञसम्राट्! त्वदीयं वपुस्तन्नुम: ॥९९॥

यक्षिणीसाधनासद्विधिप्रेरकं
तन्त्रमन्त्रादिगुप्तार्थचित्तं द्विजं
सत्वकर्माणमाद्याचरित्रामृतं
यज्ञसम्राट्! त्वदीयं शतं भावये॥१००॥

---

[21] इति वदति

[22] स्वयज्ञाक्षरैरिति पाठान्तरम्। [[ स्वहस्ताक्षरैर् - स्वीयै: पुण्यार्जकहस्तलिखितैरक्षरैर्दण्डहस्तस्य हस्तमपि वारयेद् - दण्डहस्तकृतकष्टं (यमकष्टं) वारयेदित्याशय: , न तु मृत्युं वारयेद्। हरिभक्तिद्वारा च मृत्युनिवारोऽपि शक्यस्तां भक्तिं नृभ्यो ददात्यतो मृत्युं वारयेदित्यर्थकरणेऽप्यदोष:। ]]

नम्रताढ्यं शुभाढ्यं गुणाढ्यं गुरुं
प्रेमताढ्यं मखाढ्यं शिवाढ्यं शिवं
वेदनाहारकं सत्यसंसारकं
धर्मसङ्घस्थमीडे गुरुं भावुकम्॥१०१॥

भारते नैकदेशेषु वेदालयान्
स्थापयन्पोषयन्सम्भरन्मोदयन्
विप्रजातान्बटून् शास्त्रशिक्षाप्रदो
धर्मसङ्घेट्![23] समीडे भवत्सौरभम्॥१०२॥

विप्रसङ्घं सदा स्थापयँश्चैव यो
धर्मसङ्घं मुदा वर्धयँश्चापि य:
पुण्यसङ्घैकजुट्! सर्वपापप्रमुट्!
यज्ञसम्राजमीडे[24] भवज्जीवनम्॥१०३॥

देवतानां मुनीनां गुणीनां कथां
श्रावयन्पावयन्भावयन्शूलिनं

---

[23] धर्मसङ्घ ईट् पूज्यो यस्य करपात्रगुरुस्थापनत्वात्, अथवा धर्मसङ्घेन ईड् यस्स तादृशो भवानित्यर्थ:।

[24] यज्ञा एव सम्राजन्ते यस्मिन् तद् यज्ञसम्राजं, जीवनम्। हे गुरो भवतां तद्यज्ञसम्राजं जीवनम् ईडे स्तौमि।

**यो जनाँश्चैव पौराणिके योजयेद्**
**यज्ञसम्राट्! जयेत् पुण्यवाक्! सञ्जयेत्॥१०४॥**

**यश्च काषायवस्त्रैर्यतिर्लक्ष्यते**
**श्वेतपीताम्बरैश्शोभितो मोदितो**
**विष्णुवस्त्र: क्वचिद्ब्रह्मवस्त्र: क्वचित्**
**देहवस्त्रं सदात्मैकसत्यं नुम:[25]॥१०५॥**

**भूसुरास्सर्वदा पूज्यरूपा: मता**
**वर्धतामाशिषैषां जना:! प्रीणनै:**
**भूसुराणाम्प्रसादादहं यज्ञकृत्**
**उक्तवान् यस्तमीडे गुरुं भूसुरम्॥१०६॥**

**धर्मसम्राड्यतेर्दीक्षितं वीक्षितं**
**दिव्यसम्राट्शिवैरीक्षितं पावितं**
**देवसम्राण्मखामोददं बोधदं**
**यज्ञसम्राट्! भवन्तं तमीडे गुरुम्॥१०७॥**

---

[25] वे श्रीप्रबल जी महाराज, कभी कषाय वस्त्रों से सन्यासी प्रतीत होते थे। कभी पीले वस्त्र पर पहनने के कारण विष्णु, और कभी श्वेत वस्त्र पहनने के कारण ब्रह्मचारी मालूम पड़ते थे । लेकिन असलियत यह थी कि वे अपने शरीर को भी एक वस्त्र ही मानते थे, और आत्मा ही सत्य है - ऐसा ही अपने मन में सोचते थे, उनके लिए हम नमस्कार करते हैं।

वैचित्र्यैस्संरवन्तो नियमपरपदैस्सद्गुरुप्रेरितैस्ते
तुर्यादीन्वादयन्तश्श्रुतिपदपठनाद्याजुषात्सुप्रयोगाज्
जोजुह्वन्तो हुताशे शिवशिवजपनाश्शान्तिमन्त्रैर्दिनेषु
ब्राह्मीभासोल्लसन्तो हरितहृदयकाः प्राबलास्सम्बला: न:
॥१०८॥

विद्युट्टङ्कारयुक्तेऽम्बरजलदगणे वारिधाराश्रियीत्थं
सत्यां नीराप्लुतायामपि हवनभुवि श्रीशमन्त्राहुतीनां
स्वारो यत्राम्बुदानां स्वरमिलिततया नाभसान् हूयमानस्
तद्यज्ञस्य प्रधानं प्रबलपदयुगं नौमि भक्त्या हिमांशु: ॥१०९॥
*******************

*॥आजीवनकृतविविधक्रतुत्त्वाद् यज्ञसम्राडिति पदभ्राजितानां समस्तलोककल्याणदेशकानां ब्रह्मलीनानां श्रीमताम्प्रबलजीमहाराजाणां हिमांशुगौडविरचितमभिनन्दनात्मकं शतकं सम्पूर्णम्॥*

*श्रीरस्तु॥*